


(त्रै) मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु (आ० प्र०)

संपुटः २ | 11 FEBRUARY 1964 | क्रमाङ्कः ३



शिवरात्रिविशेषाङ्कः ]

शकवर्षः १८८५

[ मूल्यम् ३० पैसाः

# विषयसूची









# प्रबोधः

धर हृदि संस्कृतं
    तर गुरु वाङ्मयम् ।
हर परधिक्कृतिं
    विहर भारत प्रवर ! ॥
कुरु वाचि संस्कृतं
    गुरुभावपूरितम् ।
निरुपमवाग्मितया
    व्याकुरु हे भारत धर्मम् ॥
बोधय संस्कृतं
    शोधय मानसम् ।
उन्माथय मूकतां
    प्रसाधय हे भाषितम् ॥
जयतु जयतु दिव्यवाणी
    जनयतु जनयतु शुभं वाणी ।
अवतु अवतु भारतं कल्यणी
    आनंदयतु आनंदयतु संस्कृतवाणी ॥



# सम्पादकीयम्

संस्कृतभाषायाः प्रचारोपायाः सर्वैरालोचनीयाः, तेषु अनुकूलाः आवश्याकाश्च आचरणे स्थापनीयाः। प्रथमतः समस्ताभिः संस्कृतसंस्थाभिः ऐकमत्यसाधने यत्नः आधेयः। यावच्छक्यं सर्वासां संस्थानां नामानि सङ्केताश्च संपादयितव्यानि। अवश्यं स्वेन क्रियमाणः कार्यकलापः अन्येभ्यो निवेदनीयः। तासामाह्वानादिके प्राप्ते, सत्यां शक्तौ सन्निधातव्यम्, अन्यथा अभिनन्दनलेखो वा प्रेषयितव्यः। तत्र समावेशे यदि गुणाः ग्राह्याः, दोषास्तु परित्याज्याः। व्यवहारे लेखनभाषणादिषु संस्कृतमेवोपयोक्तव्यम्। अन्यस्य दोषदर्शनश्रवणयोः शोधयेत् न तु परिहसेत्निन्देद्वा। यथाशक्ति भाषणे लेखने प्रोत्साहः करणीयः। दक्षिणदेशे बहुत्र देवनागरीलिपिमजानन्तः महापण्डिताः वर्तन्ते। तेषां देशलिपिं बहुमन्येत। पुरोहिताः आयुर्वेदविदः वैद्याः पौराणिकाश्च संस्कृतज्ञा इत्येव परिगण्येरन्। देशभाषापंडिताश्च संस्कृतज्ञाः एव भवन्ति। प्रत्ययविमुक्तं संस्कृतमेव ते प्रतिपदं व्यवहरन्ति। प्रत्ययसहितमपि तत् ते ज्ञातुं प्रभवन्ति।

शुभकर्मसु दक्षिणाप्रदानसमये संस्कृतदक्षिणापि समर्पयितव्या। एतां दक्षिणां अर्हायै कस्यैचित् संस्कृतसंस्थायै समर्पयेयुः। बालबालिकाः अवश्यं संस्कृतमध्यापयितव्याः। पौराणिकाश्च संस्कृतपुराणेषु विद्यमानान् विशेषान् प्रजाः बोधयेयुः। तद्भाषायाः रामणीयकतां प्रधानतः सरलतां पठनावश्यकतां च अनुक्षणं ज्ञापयेयुः। तत्तदवसरेषु गीताकालिदासवाल्मीक्यादि जयन्तीः निर्वाह्य संस्कृतवाङ्मयस्थान् विशेषान् प्रचार्य प्रजाः संस्कृताभिमानिनीः विदधीरन्।

बालकानां परीक्षाकल्पनं भाषणस्पर्धानां निर्वहणं, उत्तीर्णेभ्यः पारितोषिकप्रदानं योग्यतापत्रवितरणं च कर्तव्यम्। लघुरूपकाणि विरच्य बालैः तानि प्रदर्श्य बालानां तद्बन्धूनां च मनांसि संस्कृतप्रवणानि कुर्युः। विनायकचतुर्थी कृष्णाष्टमी

इत्यादि विशेषदिनेषु तत्तत्कथानां पठनेन पाठनेन च प्राजाः संस्कृत-ज्ञान् कुर्युः ।

अद्यतनसमये भगवद्गीता संस्कृत प्रचाराय अत्यनुकूला वर्तते । तत्तदुपन्यासवेदिकासु संस्कृतप्रभावस्य महत्तायाश्च प्रचारः कार्यः ।

मठाधिपतीनां इदमावश्यकं कार्यं यत् स्वाये बह्वंशं संस्कृत-प्रचारार्थं उपयुञ्जीरन् । संस्कृत-भाषायां निर्भराः धर्मोपदेशाःअनवरतं प्रचारयितव्याः । संस्कृतपण्डितानां स्वेच्छया संस्कृतबोधकानां तदुत्तारितविद्यार्थिजनसंख्यामनुसृत्य पारि तोषिकविशेषाश्च मठाधिपतिभिर्देयाः ।

पुरा पीठिकापुराधिपतिभिः शास्त्रोत्तीर्णेभ्यः पण्डितेभ्यः नियत-वार्षिकप्रकटनात् आन्ध्रदेशे बहवः बहुशास्त्रपण्डिता समभवन् । इदानीं तु तदपगमात् सा परम्परापि क्षीण-क्षीणा वर्तते ।

उत्तरादिमठाधीशानां पारि-तोषिकप्रोत्साहिताः अनेके द्वैताद्वैत-विशिष्टाद्वैतनिष्णाताः समशोभन्त ।

अतः सर्वेषामपि मठाधिपतीनां कृते इदं निवेद्यते । स्वामिनः,हिन्दू-धर्मस्यैव आपदि प्राप्तायां, अस्यां वेलायां आत्मकर्तव्यमविस्मृत्य संस्कृतप्रचारसहयोगः तन्मूलकतया हैन्दवधर्मसंरक्षणं च भवद्भिः कर्त-व्यम् । म्लानस्य वृक्षस्य आलवाले खलु नीरं सिक्तं तं जीवयति पल्ल-वयति फलयति च । शिरसि सिक्तं तत् निष्प्रयोजनं भवेत । तत्पुनः-प्युच्यते सविनयं भवत्सविधे भोजन भाजनादिभिः उत्सवयात्रादिभिः कालं धनं च अनपव्ययीकृत्य कृत्य-विद्भिः भवद्भिः मूलभूता संस्कृत-भाषापोषणरतैर्भवितव्यम् इति ॥



# कस्त्वं भोः ?

कस्त्वं भोः ? – भारतीयोऽहं
किं भाषते ? – सरसं संस्कृतम् ।
किं पठितम् ? – जन्मरहस्यं
कुत्र रे ? – भगवद्गीतायाम् ॥

जानासि चन्द्रमण्डलम् ?
जानासि अङ्गारकमण्डलम् ?
जानासि शुक्रमण्डलम् ?
अथ जानासि सूर्यमण्डलम् ?

जानामि सर्वं मण्डलम् ?
जानामि चेतयितुं कुण्डलिनीम् ।
कियन्नाम एतज्ज्ञानम् ?
सयत्नोऽहं परमात्मसाक्षात्कारे ॥

किमवशिष्यते तस्मिन्दृष्टे परावरे ?
किमवशिष्यते उत्तीर्णे पारावारे ।
किं विशिष्यते भौतिकज्ञानमस्मात् ?
किं वा शिष्यन्तेऽपूपिकाः दण्डस्यापि भक्षणे ? ॥



अखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य

२७ तमे अधिवेशने

अध्यक्षस्य श्री लालबहदूरशास्त्रिणं

# अभिभाषणम्

संस्कृतस्य महत्त्वं उद्दिश्य भवादृशानां पुरतः मया किं वक्तुं शक्यते ? तस्याः अमरभावा देववाणी इति नामनी तदुपरि देशस्य यादृशं गौरवं अस्तीति बोधयितुमलम् । भारतीयस्य आत्मा आलोचना च अस्यां भाषायां एव प्रस्फुरितौ भवतः । एषा अनेकासां भाषाणां जननी भगिनी धात्री च समभवत् । भारतदेशस्य जीवने इयं तथा ओतप्रेता आसीत् यथा न कदापि पृथक्कर्तुं शक्यते । अधुनापि संघे संस्कृतविदुषां गौरवादरौ यथापूर्वमेव वर्तेते ।

यद्यपि भारते अनेका भाषाः विद्यन्ते तथापि संस्कृतस्य प्रभावात् सांस्कृतिकजीवनशृंखला तु एकतां परिरक्षति । संस्कृतमाहात्म्यं च विदेशेष्वपि प्रतिफलति । विदेशीयाः बहवः अत्र आगत्य दार्शनिकग्रन्थान् अपठन् । ते च संस्कृतं प्रति महान्तमानन्दमदर्शयन् । यद्यपि एतद्देशे अधुना संस्कृतस्य पठनपाठनप्रक्रिया क्षीणा तथापि जर्मनी - अमेरिका - नेपाल-आफगनस्थान-फ्रांस-इटली - ईरानादिषु देशेषु तस्य शिक्षणाय सविशेषः प्रबन्धः निर्वाह्यते इत्यानन्दस्थानम् । एतत्सर्वविदितं यत् जर्मन्यादिषु वेदादिमहाग्रन्थानां प्रकाशनेन प्रचारणेन च एतद्भाषायाः कृते महान् उपकारः अक्रियत इति ।

संस्कृतं नाम अस्मद्देशस्य अमूल्यः निधिः । संस्कृताध्ययने एव अस्मद्देशचरित्रे वास्तविकांशाः ज्ञाये-

रन्। पुराणानि इतिहासा एव। दर्शनादिकसाहित्यभाण्डागारः अस्यां भाषायां भरितो विद्यते। भगवद्गीतादिकानि रत्नानि अत्र पूर्णानि। गीतायाः कति टीकाः विद्यन्ते! अत्र कियत् गांभीर्यमस्तीति विचारे तत्समयजातानां ग्रन्थानां आशयौन्नत्यं अवगम्यते। उदारचरितानां तु वसुधैव कुटुम्बकम् इति वचनात् अधिकं विश्वसहोदरतासन्देशः कुत्र वा अन्यत्र प्राप्यते ?

वयं तु संस्कृतसाहित्ये पूर्णं परिशोधनं, गौरवं च न अकुर्म। बहवः भाषाः उत्पद्यन्ते विलीयन्ते च। तथापि संस्कृतं ऋग्वेदकालात् अद्ययावत् व्यवह्रियमाणैव वर्तते।

कतिपयवर्षेभ्यः आरभ्य संस्कृतं पुनः शिरः उन्नमयतीति सन्तोषकरी वार्ता। अल्पशो वा संस्कृते नवीनवाङ्मयस्य सृष्टिः प्रवर्तते। पत्रिकाः प्रकाश्यन्ते, नाटकानि प्रदर्श्यन्ते, अविरलतया संभाषणं प्रवर्तते। एतस्य शब्दराशिः अक्षया अनन्ता च। अस्य व्याकरणे इयं विशिष्टा शक्तिः वर्तते, अधुनापि आवश्यकतानुसारं सरलतया नवीनशब्दानां कल्पनं कर्तुं शक्यते।

अस्मद्देशनायकाः प्रधानमन्त्रिमहोदयश्च अधुना संस्कृतविकासनाय प्रोत्साहमाचरन्ति। भारतसर्वकारश्च एतत्कोणे दृष्टिमर्पयति। उत्तरप्रदेशे सर्वप्रथमं वाराणस्यां संस्कृतविश्वविद्यालयः संस्थापितः। एवं उत्तरप्रदेशः इतरप्रदेशेभ्यः पुरोगामी अभवत्। इतरप्रदेशाः अपि पञ्चदशवर्षेभ्यः महान्तं यत्नं कुर्वन्ति। तथापि देशवैशाल्यदृष्ट्या एतत्सर्वं कृतमकृतमिव। ममायमभिप्रायः--- अधुना संस्कृतं राष्ट्रभाषा भवितुं न शक्नोति। परन्तु सर्वे अपि यथाशक्ति अल्पमधिकं वा संस्कृतं पठेयुः। अस्मद्देशे संस्कृतविदुषां बहुलता सम्मानश्च अवश्यं भवेत्। तदर्थं रात्रिपाठशालाः, प्रौढशालाः स्थाप्येरन् येन नवयुवकानां नवयुवतीनां च संस्कृतज्ञानार्जनवाकाशः लभ्येत। सर्वेपि अखंडसंस्कृतपण्डिताः न भविष्यति। तथापि संस्कृतस्य सामान्यज्ञानं यदि संपाद्यते तर्हि पुरातनभारतीयेतिहासस्य संस्कृतेश्च अध्ययने महान् उपयोगः अनुभूयेत।

संस्कृतपाठशालासु कलाशालासु च उत्तीर्णानां का गतिः ? का जीविका ? तैः संघस्य उपयोगः

कः ? इति प्रश्नाः प्रादुर्भवन्ति। प्रदेशसर्वकारः भारतसर्वकारश्च संस्कृतप्रचारविस्तृतिं यद्यपेक्षेते तर्हि तेषां विद्यार्थिनां देशसेवां संस्कृतसेवां च प्रोत्साहयितुं च शक्नुतः। मम तु समुद्योतते संस्कृतस्य आयतिः समुज्वला भविष्यतीति।

अहं ५१ वर्षेभ्यः सम्मेलनस्य कर्तव्यमनुपालयन्नस्मि। महात्ममालवीयप्रभृतीनां महाविदुषां शिक्षकाणां नायकानां च सहकारः एताममभिवृद्धिं समपादयत्। अखिलभारत संस्कृतविद्यापीठस्य राजेन्द्रकेन्द्रीय संस्कृतपुस्तकालयस्य च निर्वहणं, विश्वसंस्कृतशताब्दीग्रन्थस्य प्रकाशनं संस्कृतभवनस्य निर्माणंचेति चत्वारि कार्याणि अंतरराष्ट्रीयमहत्वप्रदायीनि संमेलनेन संकल्पितानि। एतेषु एकैकस्यापि निर्वहणे देशस्य गौरवं अभिवर्धिष्यते। विदेशेभ्यः आगतेभ्यः स्नातकेभ्यः अतिथिभ्यः च राजधान्यां एकं अधिकृतं केन्द्रं लभ्येत। तत्र ते विद्यामभ्यसितुं शक्नुवन्ति। उपर्युक्तकार्यचतुष्टये यद्यपि श्रमव्ययश्च महानेव तथापि जनता प्रभुता च आवश्यकं सहकारं दास्यत इति अहं विश्वसिमि।

अनयैव आशया प्रचोदितः देशविदेशेभ्य आगतेभ्यः स्वागतं निवेदयामि॥



## शुभसन्देशः

श्री० न० शठकोपः

भवद्भिः सादरं सबहुमानं च प्रेषितान् गैर्वाणीनाम्न्याः (त्रै) मासिक पत्रिकायाः तत्तदङ्कान् लब्ध्वा नितान्तं तोषमन्वभवम्। आबालवृद्ध मनोरञ्जितायाः अस्याः प्रत्यङ्कं मासत्रयकालयापनं सहृदयानां हृदयं सङ्क्षोभयति खलु इति यावदहं चिन्तये, तावत् "इयमितःप्रभृति मासिकी निःसरिष्यति" इति भवत्प्रकटनमालोक्य न केवलमहम्, अपितु सर्वोऽपि संस्कृतलोकः एव आनन्दसागरे निमग्नः इति सम्भावये। आशासे च।

१. विज्ञानरत्नविपणिः सरणिः कल्याणनिष्कुटस्येयम्।
संस्कृतवाङ्निश्रेणिर्जयतु धरण्यां चिराय गैर्वाणी॥
२. रमणीयाकृतिलसिता खेलन्ती रुचिरसंस्कृतारामे।
प्रतिमासं गैर्वाणी रमणीव मुदं सतां तनुतात्॥

# दधीचिः

( श्री० नारायणमूर्तिः )

अथर्वर्षेः पत्नी शान्तिः दक्षप्रजपतेः कन्या । तस्यां तस्य कश्चन परमतेजस्वी सुतो जातः । तस्य दधीचिरिति नाम चक्रे सः । दधीचिः जन्मत एव परमविरक्तः शिवभक्तश्च बभूव ।

यदा दक्षप्रजापतिः शंकराय यज्ञे भागो नादात्तदा दधीचिमहर्षिः दक्षमतीव सान्त्वयामास । किन्तु दक्षः तद्वाणीर्नाङ्गीचकार । अतो यज्ञमण्डपादुत्थाय स स्वाश्रमं ययौ । अन्ततः सतीदेव्या देहत्यगानन्तरं तं यज्ञं विध्वंसयामास वीरभद्रः ।

दधीचिरतितीव्रतपश्चरति स्म । इन्द्रः तु चिन्तयामास- "इन्द्रपदं मेऽयमाक्रष्टुमीहत" इति । अतः स कामं, अलम्बुषानाम्नीं कांचन सुन्दरीमप्सरसश्च तत तपोविघ्नकरणाय प्रेषयामास । अलम्बुषा दधीचिमहर्षेराश्रममेत्य गायन्ती नृत्यन्ती चास्ते स्म । मुमोच मन्मथोऽपि स्वसम्मोहनास्त्रम् । परन्तु न भग्नं ध्यानं महर्षेः । सत्वक्षिणी नोन्ममेष ।

मदनोऽप्सरसश्च निराशया देवेन्द्रं प्रतिजग्मुः । इन्द्रस्तु महर्षिं तं हन्तुं निरचैषीत् । देवराजस्य वासवस्याज्ञया देवा अन्येऽपि महर्षेराश्रमं प्रापुः । येन येन शास्त्रेण ते महर्षिं ताडयन्ति स्म तानि शस्त्राणि सर्वाणि महर्षेस्तेजसा मध्येमार्गे निपतन्ति स्म । देवानामस्त्रशस्त्राणि सर्वाण्यपि व्यर्थानि बभूवुः । देवैः सार्धं देवराज इन्द्रोऽपि पराजयं प्राप्य न्यवर्तत ।

यदा दैत्यनायको वृत्रासुरो देवान् पराजित्य स्वर्गान्निष्कासयामास तदा देवैः सहेन्द्रस्तमेव महर्षिं शरणं गतः । अयमत्र विषयः— वृत्रासुरः सर्वाण्यस्त्रशस्त्राणि देवानां कबळीचकार । दधीचिमहर्षेरस्थिनिर्मितं वज्रं विहाय न केनाप्यन्योपायेन स मारयितुं शक्यते स्म । न शेकुर्देवा दधीचिं हन्तुम् । किन्तु ययाचिरे तमेव ते तदस्थन्येव विवशाः ।

देवानां याच्ञामाकर्ण्य महर्षिर्जगाद "शरीरं तु यदाकदाचिन्नश्येदेव । इत उत्तमं किमन्यदस्ति ? अयं नश्वरो देहः कस्मैचिदुपकाराय प्रकल्प्येत । अहं शरीरं त्यजामि । भवन्तो ममास्थीनि स्वीकृत्य स्वकार्यं निर्वर्तयन्तु" इति ।

महर्षिर्दधीचिः समाधिमास्थाय शरीरं तत्याज । वन्या गावो विलिह्य तद्देहे केवलमस्थिन्यस्थापयन् । तैरस्थिभिरेव विश्वकर्मा तद्वज्रायुधं निर्ममे येन वृत्रो हतः ॥

# नहुषाभिलाषः

[ श्रव्यकाव्येभ्यः दृश्यकाव्यानि बहु स्वदन्ते पण्डितानां पामराणां च । यद्यपि नाटकं रमणीयमेव तथापि बहुविक्षेपपरिकलिते अस्मिन् काले जनानां तावतीं वेलां एकया आसिकया गमयितुं नास्ति कुतूहलम् । तस्मात् अल्पशरीराणि प्रेक्षणकान्येव तेऽद्य बहुमन्यन्ते । अतः अयं ईहामृगः सहृदयेभ्यः सादरं समर्प्यते । अत्र यद्यपि प्राकृतभाषैव यथाविधि कविना उपयुक्ता तथापि पठितृजनसौकर्यार्थं छायामात्रमेव अत्र निवेशितम् । तत् क्षाम्यन्तु सहृदयाः तत्र तत्र पद्ये यदि छन्दोभङ्गप्रसङ्गः स्यात् । इदं च रूपकं दशविध-रूपकाभिनवलक्ष्मीसहस्रादिबृहद्ग्रन्थप्रणेत्रा सरसकविराजेन कविरत्नेन साहित्यभूषणेन च पत्तिंबाडिवास्तव्येन श्रीमता रामानुजाचार्येण विरचितं विद्योतते । अननुरक्तां शचीं मृगव-दोहतेऽत्र नहुषः । आस्वादयिष्यतां सहृदयानां पुरतः आस्वादविशेषविवेचनं न शोभामाव-हतीति तूष्णीं स्थीयते ॥

सम्पादकः ]

श्रीमान्नो दिशताद्गिरं हयमुखो वागीश्वरो यश्श्रुतिं
दैतेयापहृतां बलाद्विधिमुखावासं विजित्याऽ सुरान् ।
लक्ष्मीनित्यविहारलालितमहावक्षःश्रिया भ्राजितो
धात्रे तां समुपादिशत्पुनरपि ज्ञानस्वरूपो हरिः ॥

(नान्द्यन्ते)

सूत्रधारः – (नेपथ्याभिमुखमवलोक्य) आर्ये, इतस्तावत् ।

(प्रविश्य नटी)

नटी – आर्य, एषाऽस्मि ।

सूत्रधारः – आर्ये, अपि ज्ञायते कुत्र समवेतेयं पण्डितपरिषदिति ?

नटी – (परितो विलोक्य) ज्ञातम् –

कृष्णक्षेत्रे कृष्णभद्रापराख्या शुद्धा पण्णानामधेया स्रवते ।
यस्मिन् घट्टेऽशीतिकृच्छ्रैर्लभ्यमेकस्मिन्नस्या यत्स्नाने फलं तत्॥

गोपाभिख्यं नगरतिलकं भान्येतन्नद्यास्तस्याः ।
कृष्णो विलसति हरिर्दक्षिणे प्रतीरे ।
जित्वारिं बलिमसुरं वामबाहुस्थचक्रः
शंखं सव्येतरकरसरोजेन संबिभ्रन् ॥

कासारभूतादिमुनीश्वराणां विमर्दनोत्थ एव खलु देहल्याम् ।
त्रिविक्रमोऽसौ श्रीदेहलीशाभिख्यो विराजते कृपापयोधिः ॥

तस्य खलु फाल्गुनमासे भुवनख्याते महामहे महिते ।
श्रीकल्याणमहोत्सवदिने पुष्पालयाख्यलक्ष्म्याः ॥

तयोर्हरिलक्ष्म्योः पुरतस्तस्या गृहस्य पूर्वस्थे ।
पण्डितसभाविशाले मण्टपरत्ने विभात्येषा खलु ॥

सूत्रधारः – तत्,

सत्ताभिधाग्रहारे वात्स्यवराहार्यसूरितनयोऽद्य ।
कविनिवहचक्रवर्ती विजयति रामानुजः खलु बुधेन्द्रः ॥

नटी – तेन रामानुजेनैव विचित्राणि कृतान्यपि ।
आवयोरभिनीतानि रूपकाणि बहूनि खलु ॥

सूत्रधारः – धरामराग्र्यस्सयतीन्द्रनामा गुणी बुधेन्द्रैर्महितः कुलीनः ।
आचार्यमालाहयवक्त्रचित्तः कलौ कुमत्यद्रिपविर्विभाति ॥

नटी – तस्मादिदानीं तेन कविकुलचक्रवर्तिना किन्नामाभिनवं रूपकं रचितम् ?

सूत्रधारः – आर्ये ? किं विस्मृतं भवत्या । शृणु ।

नव स च हि रूपकेष्वपि कृत्वाऽसौ दशविधेषु कविवर्यः ।
नहुषाभिलापनामकमीहामृगरूपकश्चक्रे ॥

नटी – आर्य! स्मरामि स्मरामि। श्रीवाजिवक्त्रकरुणाकटाक्षात् बहुरूपकाणि करोम्यहमिति खलु अवकाशलाभसमये निश्चितं कविनैवानेन मथुरोक्तिना पुरा॥

वेदान्तसूरिचरितं प्रथमं कृत्वा रूपकमेषः।
रुक्माङ्गदस्य चरितं करिष्यमाणोऽन्तिमं करोतीदम्॥

सूत्रधारः – श्रीकालिदासमुख्या अक्षरलक्षाभिलाषिणः कवयः।
त्रिचतुर्नाटककरणाल्लोके प्रथिता महाकवित्वेन॥

तत्कविनाटकजालान्यक्षरलक्ष्याभिलाषिणां तेषां।
त्रय्यन्तदेशिकानां कृतेर्न तुल्यानि नाटकेन्द्रस्य॥

तद्गुरुतद्ग्रन्थेषु च भक्तः कविरेष माधवप्रीत्यै।
दशविधरूपककारी विलसति भुवने महाकविश्रेष्ठः॥

वाल्मीकीये पाणिनीयेऽपि सूत्रे
नास्य ज्ञानं भारते फणिराजे।
तद्व्याख्यास्वप्यन्यशास्त्रेष्वथापि
ह्याचार्याणां वीक्षयाऽसावभिज्ञः॥

तत् तेनैव नहुषाभिलापरूपकेण अभिनेतव्यम्।

(नेपथ्ये)

रे रे रम्भरजे सुराधिपपदप्राप्त्याशया दीक्षितः
श्रीमन्तोद्य हि चक्रवर्तिन इह श्रीवाजिमेधक्रतौ।
एते श्रीनहुषाभिधानमहिता मद्भ्रातरो रक्षिभि-
स्संप्रेष्याश्वमिळाप्रदक्षिणकृते भद्रासने भान्त्यमी॥

तदस्माभिस्सावधानैर्भवितव्यम्।

नटी – (श्रुत्वा) आर्य ! मम अनुजेन परिग्रहीतनहुषचक्रवर्त्यनुजवृद्धशर्माख्यवेषेण महाराजचक्रवर्तिनः अश्वमेधयागदीक्षितस्य पुरोहितमन्त्रिपार्षदप्रमुखमहाजनसेवितस्य नहुषस्य प्रवेशः सूचितः । तस्मात् आवामपि अनन्तरकरणीयाय सज्जीभवावः ।

॥ इति प्रस्तावना ॥

(ततः प्रविशति यथानिर्दिष्टो भद्रासनस्थो राजा)

राजा – (स्वगतं) अहो मानवानां महेन्द्रभोगो दुर्लभः । तथाहि–

जेतव्याः क्षितिपालकाश्च निखिलाः ख्याताश्च ये तत्समाः
एकः कार्य इहाश्वमेधसुमखो जित्वा नृपान्तानपि ।
तादृग्यज्ञशतं विधाय भुवने लभ्यं पदं वज्रिण-
स्तत्कर्तुं प्रयतस्य मे खलु मनश्चिन्ताकुलं बाधते ॥

(महिष्या सह आसनादुत्थाय पुरोहितं वीक्ष्य साञ्जलिबन्धं) (प्रकाशं)

नीचा नैवारभन्ते भृशकृशहृदया विघ्नबाहुल्यभीत्या
प्रारभ्यैके तु विघ्नैः प्रतिहतहृदया मध्य एव क्षिपन्ति ।
विघ्नैर्नानाविधैरप्युपहतमनसः केचिदेव क्षमायां
प्रारब्धं कर्म कुर्वन्त्यतिदृढमतयो ह्युत्तमास्सद्गुणाढ्याः ॥

तत भवद्भिर्यथा मन्त्रद्रव्यक्रियालोपादिभिः निर्विघ्नपरिसमाप्यः क्रतुर्भवेत् तथा संरक्षणीयोऽयं जनः

पुरोहितः – भोश्चक्रवर्तिन् ! अत्यक्तनिखिलधर्मकर्मणां भवतां शिक्षकाणां पुरोहितानां विज्ञातनिखिलवेदितव्यानां अस्माकमपि मन्त्र-लोपादिविघ्नः ? शृणोतु तावत् –

अस्मद्योगबलेन नारदमुखैस्संसेवितं वाङ्निधिं
प्रत्यक्षं सममश्यमाश्रमतले ब्रह्माणमब्जासनम् ।

(सरोषम्

# श्रीरामः

श्रीरामः दशरथस्य पुत्रः ।
लक्ष्मणः दशरथस्य पुत्रः ।
भरतः दशरथस्य पुत्रः ।
शत्रुघ्नः दशरथस्य पुत्रः ।
रामलक्ष्मणभरतशत्रुघ्नाः दशरथस्य पुत्राः ।
रामलक्ष्मणौ दशरथस्य पुत्रौ ।
रामलक्ष्मणौ सोदरौ ।
रामलक्ष्मणभरतशत्रुघ्नाः सोदराः ।
लक्ष्मणः रामस्य अनुजः । रामः लक्ष्मणस्य अग्रजः ।
रामस्य भार्या सीता । रामस्य माता कौसल्या ।

रामस्य पिता दशरथः । रामस्य भ्राता लक्ष्मणः । रामस्य स्वसा शान्ता । सीतायाः पतिः रामः । शान्तायाः अनुजः रामः । रामस्य पुरी अयोध्या । अयोध्यायाः अधिपः रामः । कौसल्याः सुतः रामः । लक्ष्मणशत्रुघ्नौ सुमित्रायाः सुतौ । कैकेय्याः पुत्रः भरतः । भरतः रामस्य अनुजः भवति । भरतः शत्रुघ्नस्य अग्रजः भवति ।

**प्रश्नाः** – दशरथस्य सुतः कः ? दशरथस्य सुताः के ? रामस्य भार्या का ? दशरथस्य भार्याः काः ? रामः कस्य सुतः ? रामः कस्याः पतिः ? रामः केषां अग्रजः ? शत्रुघ्नः केषां अनुजः भवति ? सुमित्रायाः सुतौ कौ ?






माता – जाते, किं स्तन्यं न पिबसि ?

शिशुः – माद, कापीं पढमं पायय । तदो सन्यं पाचामि ।

  

पतिः – व्यर्थव्ययानां अनियमने कुटुम्बभारः आवां अधो नयेत् । तत् त्वया विवेकिन्या भवितव्यम् ।

भार्या – को वा व्यर्थव्ययः क्रियते मया ?

पतिः – अनुदिनं सिनेमाप्रदर्शनं परित्याज्यम् ।

भार्या – त्वं तु कार्यालये एव आर्धरात्रं तिष्ठसि । मया एकाकिन्या कथं स्थातव्यम् ?

  

महावीरत्यागी – शास्त्रिन् , काश्मीरे भवता शीतं कथं नीतम् ?

लालबहदूरशास्त्री – त्यागिन् , अहं षोडश कंचुकान् उपर्युपरि अधरम् । तदुपरि नेहूमहाशयात् स्वीकृतं प्रच्छदकंचुकमपि अधरम् ।

महावीरत्यागी – प्रच्छदकंचुकं तु न प्रत्यर्पयत ।



# सुमतिशतकम्

( पूर्वानुबन्धः )

श्री कुण्टिमद्दि शेषशर्मा

न क्लिश्यते स्वयं; नो क्लेशयति परञ्च; तत्तदनुकूलम् ।
सल्लपति; योऽ पसरति च विषमे; धन्यस्स एव हे सुमते ॥ ॥ १८ ॥

सततं दोषगवेषणनिरतस्योपासनान्नकर्तव्यम् ।
भुजगफणाच्छायायां भेकनिवासेन तत्समं सुमते ॥ ॥ १९ ॥

धनधान्यानि यदा स्युस्तदा समायान्ति बान्धवा गृहिणम् ।
कल्लोललहरिकाभिस्सह मण्डूकास्तटाकमिव सुमते ॥ ॥ २० ॥

मा दूषय बन्धुजनं; लुनीहि मा क्षारकाणि दोषोऽयम् ।
अपयाहि मा समीकात; माऽतिक्राम च गुरोर्वचस्सुमते ॥ ॥ २१ ॥

एकस्तुपरिष्कर्ता, चैकः कायस्थ एकनगरस्य ।
वर; मन्यथा समस्तं तद्यत्यस्तं भवेन्नु हे सुमते ॥ ॥ २२ ॥

नेच्छत्सुहृदं, पतिमपि नेच्छन्तं, यस्सतीमनिच्छन्तीम् ।
न जिहासति, गोपोऽसौ; गोपो गोपो नु तत्वतस्सुमते ? ॥ ॥ २३ ॥

रोचिषि गते तु तिमिरं, रोचिस्सञ्जायते गते तिमिरे ।
परिवर्तेते ते वा भाग्याऽभाग्ये सुखाऽसुखे सुमते ॥ ॥ २४ ॥

बलवत्तमोऽपि जायां चिरेण तरुणींस्त्यजेन्न मातृगृहे ।
चरितुं गणिकाचारं वेशोऽर्पणमेव तत्स्वयं सुमते ॥ ॥ २५ ॥

सिंहासनेऽपि हैमे शुभलग्ने समुपवेशितश्शुनकः ।
अभिषिक्तोऽपि च गाङ्गैर्जहाति नैजं गुणं न हे सुमते ॥ ॥ २६ ॥

मण्डूको यदि पङ्गु, स्सर्पश्च गदी, सती च दुश्शीला ।
निर्धनता जरसि भवे, दुखमवश्यं भवेदतं सुमते ॥ ॥ २७ ॥

त्यक्तोदका कमलिनी कमलाप्तस्य प्रभाभिरपि शुष्येत् ।
निलयेषु विगलितेषु हि सुहृदोप्यरयो भवन्ति हे सुमते ॥ ॥ २८ ॥

कायस्थः कायस्थं विश्वस्येच्चेन्म्रियेत, नो जीवेत् ।
तमविश्वसन्स धर्मं, जीवतु गूहन् स्वमर्म हे सुमते ॥ ॥ २९ ॥

कायस्थमननुसृत्य हि सुधाऽपि पीना विषायते नूनम् ।
ईश्वरगन्त्र्यप्यक्षे नो धावति कालिकां विना सुमते ॥ ॥ ३० ॥

कायस्थस्साधुश्चेदिभश्च्युतमदः फणी न दंष्ट्रा चेत ।
नालिर्यदि कुट्टयिता, मन्यन्ते तांस्तृणाय हे सुमते ॥ ॥ ३१ ॥

उद्गिरति तिक्ततां ननु दुष्टश्चेत क्षारको न माधुर्यम् ।
अपहाय रम्ययुवतीश्चिकमिषते यश्शशुः पशुस्सुमते ॥ ॥ ३२ ॥

अकवेर्लिखितं, नवरसभावपराचीनकामिनीरागः ।
लक्ष्यकिरिभेदने यन्नालं शरकौशलं वृथा सुमते ॥ ॥ ३३ ॥

कलहाय हि ऋणदानं, ललनानां नास्ति निश्चला प्रियता ।
वलिना न चलति कीर्तिः, ललिता न हि दुष्टसङ्गतिस्सुमते ॥ ॥ ३४ ॥

सुष्ठु तरुणोपभुक्तां कामयमानास्तु पल्लवास्तन्वीम् ।
फूत्कृतरसालसङ्करसम्भ्रान्तपिपीलसोदरास्सुमते ॥ ॥ ३५ ॥

कारणरहितो हासः पेरणविधुरा सुधांशु बिम्बमुखी ।
पूरणरहितो मोदक, उपयामोऽचीरणो मुधा सुमते ॥ ॥ ३६ ॥

( सशेषम् )

# समीक्षा

## १४. भाष्यमुक्ताफलम्

मूल्यम् — रू. ५

प्राप्तिस्थानम् —

**B. Chenchupunnayya,**
Telugu Pandit Z. P. H. S. School,
Kandukuru, Nellore (Dt.)

"सांख्यवेदान्तप्रासादीयभाष्यमुक्ताफलम् (पर्वभागः)" इति नामविलसितं कोशरत्नं समीक्षितं । प्रणेतारोऽस्य कोशरत्नस्य मत्प्रियसुहृत्तमा महाविद्वांसोऽधुना तुरीयाश्रममलङ्कुर्वन्तीति शृणुमः । त एते पूर्वाश्रमे "वैद्यरत्नम" विरुदसनाथाः राज्ञी (णी) वेङ्कटाचलपतिप्रसादमहाग्निचिदभिख्या मत्समवयसस्सर्वतन्त्रस्वतन्त्र-पण्डिताः । एते "दैवज्ञसार्वभौम" "साङ्ख्याचार्य" "सर्वतन्त्रस्वतन्त्र" बिरुद-भाजां श्री नृसिंहमहाग्निचिदभिख्यानां "नृसिंहसाङ्ख्यदर्शन" नामकसूत्र–तद्भाष्य-प्रणेतॄणां सुतोद्धाः पाण्डित्येन पितॄनप्यतिशेरते ।

अथ ग्रन्थं समीक्षामहे । ग्रन्थस्यास्य "भाष्यमुक्ताफलमि"ति नामकरणं समुचिततरमिति प्रतिभाति । यतोऽद्वैतभाष्यसागराच्छ्रीशङ्करभगवत्पादसमुत्थात्सु-गम्भीरात्सारतया मुक्ताफलमिव समुद्धृतस्सारांशोऽत्र विराजते ।

कोशोऽयम्पूर्वषट्कविराजितः । मन्येऽस्योत्तरोऽपि भागो विद्यत इति ।

अस्मिन्कोशे पूर्वषट्कस्य षड्भूमिका राराजन्ते । तत्र परिणामविवरण-भूमिका प्रथमा, वादविमर्शभूमिका द्वितीया, अध्यासभूमिका तृतीया, अविद्या-भूमिका चतुर्थी, कर्मपरिणामभूमिका पञ्चमी, शाङ्करतत्त्वभूमिका षष्ठीति नामतो निर्दिष्टाः । प्रासादोऽयं मुक्ताफलरचितः षड्भूमिकाविराजितो महोन्नतश्चक्षुरन्न-म्यदर्शनीयोऽस्ति ।

अथ क्रमेण भूमिका अविरुद्ध तत्तद्विशेषान्संपश्यामः । प्रथमभूमिकायां ब्रह्मपरिणामवादविषयाणि चित्राणि नैकधा प्रदर्शितानि । तत्र "कृत्स्नस्यैक-देशस्य वा परिणामाङ्गीकारे दोषदर्शनाल्लोकदृष्टान्तेष्वेतद्विलक्षणदृष्टान्तादर्शनाच्च ब्रह्मपरिणामवादं परित्यज्य भाष्यकारैरध्यासवादोऽङ्गीकृतः । स चाध्यासस्त्रिविधः जडाध्यास-अविद्या-विवर्तभेदात् । सूत्रकाराभिप्रायेण पूर्णब्रह्मपरिणामस्यैवाङ्गीकारो दृश्यते । तथापि सूत्रकारभाष्यकारप्रदर्शितमार्गयोर्भेदेऽपि न फले भेदः" इति प्रतिज्ञाय "पूर्णमदः पूर्णमिद" मित्यादिश्रुत्यनुसारेण शास्त्रीयगणितरीत्या पूर्णपरि-णामोऽपि ब्रह्मस्वरूपाच्यवनात्सुष्ठु सम्पद्यत इति ग्रन्थकारैः सुमनोहरं समर्थितम् । पूर्ण-ब्रह्मपदयोर्यथा नार्थान्तरं विद्यते तथा गणितशास्त्ररीत्या पूर्ण-बिन्दु (अनुस्वार-वन्मण्डलाकाररेखा) पदयोरप्यनर्थान्तरं प्रसिद्धमिति निरूप्य तद्दृष्टान्तेन पूर्णपरि-णामस्वरूपं सम्यग्विवेचितम् । तत्राकृतिभेदेन गणितशास्त्ररीत्या चतुर्था पूर्णपरिणामे स्वरूपात्यागपूर्वकं तत्तद्भेदहेतुरूपपरिणामप्रकारोऽपि । प्रक्रिया चेयं स्वपितृपज्ञमिति तदुत्तीनसाङ्ख्यदर्शनतस्समार्थयन् । गणितशास्त्रे प्राक्पाश्चात्यसरण्यभिज्ञानां दैवज्ञ-चूडामणीनां तेषां, (पितृणां) स्त्वेषां च प्रतिभाऽत्र सम्यक्प्रतिभाति ।

वादविमर्शभूमिकायां द्वितीयायां परिणामवाद-जडाध्यासवाद-अविद्यावाद-विवर्तवादरूपमतभेदनिरूपितवादेषु परिणामवादस्य स्वमतसंमतपूर्णपरिणाम-वादस्य च भेदं दर्शयन्तः "परिणामः क्षीरस्य दधिपरिणामवत्स्वरूपोपमर्दे सति स्वत एव रूपान्तराविर्भावः, पूर्णपरिणामस्तु स्वरूपानुपमर्दे सति स्वस्मिन् स्वत एव गणितशास्त्रप्रसिद्धपूर्णाङ्कवद्रूपान्तराविर्भावः । विवर्तवादोऽपीदृश एवे"ति निरूप्य पूर्णपरिणामवादस्य प्राशस्त्यं निपुणतया प्रदर्शितवन्तः । अन्ततश्च शङ्ख इव संख्या तु बभुत्सुं न स्खालयतीति बहुरम्यतया निरूप्य पूर्णपरिणामवादस्य प्राशस्त्यं प्राची-कशन् ग्रन्थकाराः ।

अथाऽध्यासभूमिकायां तृतीयायां अध्यासभाष्यमनाचार्यकृतमित्याक्षेप-प्रपञ्चनपूर्वकं तस्याचार्यकर्तृकत्वं सम्यङ्निरूपितम्; विरोधाश्च परिहृताः ।

ततोऽविद्याभूमिकायां चतुर्थ्यां अविद्यामायाशब्दवाच्ययोः क्रमेण पार-तन्त्र्यस्वातन्त्र्यकृतो भेदः, न वस्तुनो भेदः । तत्र माया निर्गुणे ब्रह्मणि, जीवे अविद्येति चाभिधाभेद एवेत्यादि सुष्ठु परिकर्मितं समर्थितं च ।

पञ्चमायां कर्मपरिणामभूमिकायां अविद्याविशिष्टजीवविषयकाणि सर्वाणि शास्त्राणि प्रपञ्चमिथ्यात्वं त्वधिगतपरमार्थविषयमेव। अतोऽविद्यावतां जीवानामनधिगतपरमार्थानां तु शास्त्रचोदितकर्मकाण्डमाश्रित्य तदुक्ताचरणेन चित्तशुद्धिं प्राप्य पश्चाद्यथार्थस्वरूपावबोधकज्ञानकाण्डमाश्रित्य विद्योपलब्ध्या अविद्यानिवृत्तिपूर्वकं ब्रह्मत्वं प्राप्नुयादिति हेतोरवश्यं कर्माऽऽचरणीयमिति सम्यक्समर्थ्य सन्तानाय यथा मातापित्रोरुभयोरप्यावश्यकताऽस्ति, तथा कर्मज्ञानकाण्डयोरुभयोरपि मोक्षेऽस्त्यावश्यकतेत्यादि सम्यङ्निरूपितम्। अत्र भूमिकायां सौश्रुतगर्भवृद्धिप्रक्रियाया व्युत्क्रमेण एकादिसंख्या प्रतिपादकत्वमस्तीति सम्यङ्निरूप्य तेषामायुर्वेदवित्तमत्वं सम्यक्प्रादर्शयन् ग्रन्थकृतः। अन्ततश्च संस्कृतभाषायामेव विभक्तिषु द्विवचनसत्तां श्रुतिमूलकत्वेन सम्यक्समर्थितवन्तः।

अन्तिमायां शाङ्करतत्त्वभूमिकायां षष्ठ्यां अद्वैतस्य विपुलनिरूपणपूर्वकं विशिष्टाद्वैत-द्वैतमतयोरपि दिङ्मात्रनिरूपणेन मत्रतयोऽपि कर्माचरणावश्यकताऽङ्गीकृतेति सम्याङ्निरूप्य अन्ते फलितांशनिरूपणे "कर्मावश्यं क्रियादेव रहितः फलकांक्षया" इत्यादिना अनभिसंहितफलकर्माचरणावश्यकतां समार्थयन्ग्रन्थकर्तृमहशयाः।

अस्मिन्कोशरत्ने "शुभाभिशंसनम्" इति स्वकृतोपन्यासम्, ग्रन्थोपोद्घातम्, मुद्रास्वरूपम्, शून्यपरिकर्माष्टकम् इत्यनुबन्धनिबन्धांश्च समीचीनान्प्राचीकशन्। ग्रन्थान्ते च स्वपितृपादकृत "नृसिंहसाङ्ख्यदर्शनसूत्राणि" षट्त्रिंशन्मितानि तद्भाष्यञ्च समघटयन्।

एवंरूपविमर्शविराजितग्रन्थप्रणयनेन प्रकाशनेन च सर्वमतकर्तृणामरस्यं बोधयन्तो ग्रन्थकर्तृमहाशया बहूपकारमास्तिकलोकस्याकार्षुरिति विज्ञापयति॥

तिं. प. रामानुजस्वामी
( रामतीर्थम् )



# वार्ताः

कोल्लिपरनिवासिनी मरेंड्डिबसिविरेड्डिजाया मंगम्माख्या तेनालिनगरे वेदसंस्कृतपाठशालायाः स्थापनार्थं शाकमूरिवारिवीथ्यां ४०० गजपरिमितं निवेशनस्थलं तत्रत्यभवनेन सह प्रदत्तवती । तेन साकं तन्निर्वहणाय द्विसहस्ररूप्यकाण्यप्यदात् सा ॥



सीमागांधिः अब्दुल्गफरखानः हरिपुरकारागारात् विमुक्त इति पाकसर्वकारः प्रकटीचकार ।



विभिन्नकक्ष्ययोः रष्यीयोपग्रहयोः प्रवेशाय तद्वाहकः एक एव राकेटः रष्यासर्वकारेण प्रयोजितः । प्रयोगश्च सफलीभूतः । प्रथमोपग्रहः एलक्ट्रानः १, द्वितीयः एलक्ट्रानः २ इति नामभ्यां व्यवह्रियेते । द्वावपि राकेटात् पृथग्भूतौ स्वस्वनिर्णीतकक्ष्ययोः प्रविष्टौ परिभ्रमतः । अमेरिकयाः षष्टः रेंजरः आकाशे प्रमुक्तः । स च चन्द्रस्य छायाचित्राणि संगृह्णाति । स २ तिथौ चन्द्रमण्डलेन संघृष्टः स्वकार्यासमर्थः समजनि ॥



भारतप्रधानन्यायाधिपतित्वेन श्री गजेन्द्रगाड्करः नियुक्तः ॥



पवित्रकेशस्य प्रत्यभिज्ञा पञ्चदशभिः महम्मदीयमताधिकारिभिः कृता । तेषां प्रकटनेन च केशान्दोलनं अवसितम् ॥



भूकराभिवृद्धिमसहमानैः बहुभिः आन्ध्रप्रदेशे सत्याग्रहः क्रियते, निर्बन्धश्च अनुभूयते ॥



भद्रतामण्डलीसमावेशो चाम्लामहोदयः कश्मीरविषये जनवाक्यसेकरणं भारतसर्वकारः न अंगीकरोति इति समघोषयत् ॥

संस्कृतसेकंडरीपाठशालानां कृते एकवर्षादारभ्य आन्ध्रसर्वकारेण प्रदानं (Grant) न दत्तमिति खेदकरी वार्ता ॥

  

सैप्रससमस्यां भद्रतामण्डल्याः दूरीकृत्य काश्मीरसमस्यां तत्र निनीषतां आंग्लामेरिकाफ्रेंचिनायकानां वैखरीं निशितं विमृशति रष्या ॥

  

आन्ध्रप्रदेशे ग्रामोद्योगिनां सत्याग्रहः क्रमशः विजृंभते ॥

  

चैनादुश्चर्याविषये समालोचनाय ब्रह्मदेशीयविप्लवमंडल्यध्यक्षः भारतदेशमागत्य प्रधानमन्त्रिणा संभाष्य पुनर्निवृत्तः ॥

  

कान्पूरविमाननिर्माणकेन्द्रे निर्मितं प्रथमं आफरो – ७४८ सुव्रतोविमानं भारतविमानदलाय समर्पितम् ॥

  

चित्तूरजीवकारुण्यान्नदानसमाजभवने १५–२–६४ प्रभृति २४–२–६४ पर्यन्तं श्री शंकरानन्दस्वामिना गीतोपन्यासाः महावैभवेन निरवाह्यन्त । सहस्रशो जनाः समम्मिलन् सुप्रसिद्धासु तासु गोष्ठीषु ॥

  

## देवीमाहात्म्यम्

त्रिशिरःपुरीशाखायाः प्रोत्साहेन श्रीमता मल्लाजीरत्नशर्मणा प्रतिरविवासरं प्रातः "कलकुलं" प्रदेशे देवीमाहात्म्यमधिकृत्य उपन्यस्यते ॥





# शुभावार्ता



आन्ध्रप्रदेशसाहित्यविद्वत्सभ (Akademi) या संस्कृत-विभागस्य आलोचनासंघः (Advisery Committee) नूतनतया कश्चिदायोजितः अत्र निर्दिष्टैः महाभागैः ।

१. श्री शिवशंकरस्वामी — अध्यक्षः

२. " ति. क. तिरुवेङ्कटाचार्यः (सं. भा. प्र. सभायाः प्रधानमन्त्री) — सभ्यः

३. " के. लक्ष्मणशास्त्री (संस्कृतस्य विशिष्टकार्याध्यक्षः) — सभ्यः

४. " वे. तिरुवेङ्कटाचार्यः — सभ्यः

५. " डा. आर्येन्द्रशर्मा (संस्कृतशाखाध्यक्षः उस्मानिया-विश्वविद्यालयस्य) — सभ्यः

६. " उ. सुब्बरामशास्त्री (नेल्लूरु संस्कृतकलाशालाध्यक्षः) — सभ्यः



# क्रोधिवत्सरीयाः

## दक्षिणायनपरीक्षाः

एतद्वत्सरीया दक्षिणायनपरीक्षाः १९६४ सेप्टंबर ५, ६, ७, तिथिषु प्रचलिष्यन्ति । तदर्थं सशुल्कमावेदनपत्राणि जूलै २० तिथेः पूर्वं प्रेषणीयानि । विलम्बशुल्केन साकं जूलैमासान्तपर्यन्तं तानि स्वीक्रियेरन् ।

| | | |
|---|---|---|
| १. परिचयपरीक्षाशुल्कम् | रू० | १–५० |
| २. अभिज्ञपरीक्षाशुल्कम् | ,, | ३–०० |
| ३. विचक्षणपरीक्षा शुल्कम् | ,, | ४–०० |
| ४. समर्थपरीक्षाशुल्कम् | ,, | ६–०० |
| ५. कोविदपरीक्षाशुल्कम् | ,, | १०–०० |
| समर्थपरीक्षायाः प्रत्येकखण्डशुल्कम् | ,, | ३–०० |
| कोविदपरीक्षायाः प्रत्येकखण्डशुल्कम् | ,, | ३–०० |
| विलम्बशुल्कम् | ,, | ०–५० |
| विशेषानुमतिशुल्कम् | ,, | ३–०० |
| केन्द्रपरिवर्तनशुल्कम् | ,, | ०–५० |
| योग्यतापत्रप्रतिकृतिशुल्कम् | ,, | १–०० |
| प्राप्ताङ्कज्ञापनशुल्कम् | ,, | ०–२५ |
| प्रश्नपत्रसंचयः (एकपर्यायस्य) | ,, | ०–२५ |

आवेदनपत्रादिकं विना मूल्यं लभ्येत ।

परिचयाभिज्ञविचक्षणपरीक्षापाठ्यपुस्तकानि सर्वाणि, अन्यानि च कतिचन सभया विक्रीयन्ते ।

पत्रव्यवहारसङ्केतः
**प्रधानमन्त्री,**
संस्कृतभाषाप्रचारिणी सभा,
चित्तूरु (आ० प्र०)

## प्रकटनशुल्कविवरणम्

इयं गैर्वाणी प्रतिमासं विस्तृततया प्रचारमाप्नोति। धनिनां विदुषां सामान्य-जनानां च आदरपात्रं भवति। न केवलमान्ध्रमद्रासराष्ट्रयोरेव, अपि तु सकलेपि भारतदेशे सिंहले च बहुप्रसिद्धा इयं प्रजादरपात्रं भवति।

तस्मात् वणिजः पण्डिताः कवयः व्यवहारिणश्च वाणिज्यादिकान् अंशान् अत्र प्रकटयेयुर्यदि महान् लाभो भविष्यति।

## प्रकटनशुल्कम्

सकृत्

| | |
|---|---|
| एकपृष्ठस्य | रू ३०—०० |
| अर्धपृष्ठस्य | रू १५—०० |
| पादपृष्ठस्य | रू ८—०० |
| पृष्ठाष्टमांशस्य | रू ४—०० |

चतसृषु संचिकासु

द्विगुणम्,

द्वादशासु संचिकासु

पञ्चगुणम्,

वर्णमुद्रणे सपादं शुल्कम्

— प्रकाशकः

# चल ! भारत !

चल चल चल चल भारत ! छलनापरशिक्षणाय ।
हिमगिरेः किलापत्तिः भवतीति कथा प्रथते ॥

पादैः पातालमपि च शीर्षैराकाशतलम् ।
बाहुभ्यां प्राक्पश्चिमसागरावभिव्याप्य च ।
उत्तरदिशि प्रोत्तुंगस्यात्तभीकराकृतेश्च
भारतजननीरक्षणभारभरितरूपस्य च ॥ ॥ चल ॥

परमशिवायतनस्य च पार्वत्याश्चाश्रमस्य
गणपतिक्रीडाङ्गणस्य गङ्गासिक्ताङ्गस्य ।
देवविहारमहितस्य दिव्यौषधिपालकस्य
पावनस्य परपरिभवविरहितस्य चाचलस्य ॥ ॥ चल ॥

सर्वरत्नसंभृतस्य सर्वोन्नतशिरस्कस्य
शर्वादिसुपर्वार्चिताऽखर्वचारुहृदयस्य ।
पारसीकचीनारभपाटच्चररोधकस्य
भारतजननीविलासभासुरावकुण्ठनस्य ॥ ॥ चल ॥

गर्जन्तु भवत्फिरंगभास्वदग्निमण्डलानि
मार्जयन्तु शत्रुकीटाक्रान्तान्यपि मण्डलानि ।
प्रखराः प्रहरावनाश्च विहरन्तु च जागरूकाः
रेखा सीमायाः संरक्ष्यतां अस्मद्भारतस्य ॥ ॥ चल ॥

# गैर्वाणी

## [ मासिकी ]

इयं जनवरिमासात्प्रभृति मासिकी निस्सरति। वार्षिकं साधारणसदस्यताशुल्कं रू० ४-०० निर्णीतम्। अभिमानिनां वार्षिकं १०-०० ।

### विज्ञप्तिः

| | | |
|---|---|---|
| महाराजपोषकः | रू ११६ | प्रदाता |
| राजपोषकः | रू ६० | प्रदाता |
| पोषकः | रू ३० | प्रदाता |

### यावज्जीवसदस्याः

बहवः महाभागाः विनाशुल्कमेव गतसंवत्सरे पत्रिकां अगृह्णन्। बहुकालं तथा कर्तुं अशक्यं भवति। अतः प्रार्थये वार्षिकं रू० ४ संप्रेष्य पत्रिकायाः पोषणं कुर्वन्तु ते इति।

अपि च प्राचीनाः सदस्याश्च स्वच्छन्दः संप्रेष्य यथापूर्वं एतत्सेवामङ्गीकुर्वन्तु ।

इति प्रार्थयिता

ति. कं. तिरुवेङ्कटाचार्यः

प्रधानमन्त्री



# राजाजीकथा ३



## "नष्टो मोहः" "स्थितोऽस्मि गतसन्देहः"

(आ. वरदराजः)

भारद्वाजः कश्चित् बाल्यादारभ्य तपस्यन्नास्त। तस्य काचिदिच्छा आसीत। पुरातनैर्महर्षिभिः विरचिताभ्यः उपनिषद्भ्योऽपि अतिनूतनः कश्चिदुपनिषद्ग्रन्थः प्रणेतव्य इति। एवं कर्तुकामस्स तदर्थं किंकर्तव्यमित्यजानन् ब्रह्माणं चतुर्मखं ध्यायन्नास्त।

  

ब्रह्मा साक्षात्कृतः; "वत्स! तवाभीप्सितं कि"मिति अपृच्छच्च।

अहं कंचिन्नूतनं उपनिषद्ग्रन्थं रचयितुकामोऽस्मि। अज्ञापयतु भवान् तदर्थं किं वा करणीयं? इति पृष्टवान् ब्रह्माणं भारद्वाजो बालर्षिः।

ब्रह्मोवाच–"प्राचीना उपनिषदः सर्वा अपि सम्यगधीहि भोः"-इति।

"यद्यहं प्राचीनानां उपनिषदां अध्ययनं करोमि तर्हि न कोऽपि नवीनो विषयः स्फुरेन्मम। प्राचीनोपनिषत्सु प्रोक्तमेव मन्मनसि सुदृढं लग्नं स्यात्। नान्यस्य नव्यभावस्य अवकाशः प्रवेशो वा स्यात्। प्राङ्मुखो दर्भास्तरणोपविष्टश्च यदाऽहं किञ्चिद्विलक्षणं लिखितुमुद्युक्तो भवेयं तदा नूनं प्राचीनभावपरम्परैव लिपिबद्धा स्यात्। न तत्र नव्यं किञ्चित प्रस्फुरेत्। ममाभिलाषः पूर्णः पूरितो वा नैव भवेत्"-इत्याह बालर्षिः।

सत्यं यदुक्तं भवता। माऽस्तु नाम कामं उपनिषदां अध्ययनं। अपितु, कतिपयकालपर्यन्तं सांसारिकं वा जीवितं अनुभूय विजिज्ञासितव्यं भवता। तथा चेन्नवीना बहवो विषयाः अवगताः स्युः इत्याह ब्रह्मा।

"अहं हि तपस्वी ऋषिः, संसारी कथं भवेयम्? यदि संसारे पदं निधास्यामि तर्हि सांसारिकमेव जीवितं ममातीव भोग्यतया प्रतीयेत। ज्ञानविज्ञानसमन्विता च उपनिषत् नैव लिखितुं शक्येत। न स्फुरेत। तद्धि मह्यं रोचते"-इत्याह बालर्षिः।

युगपद्विकसितेन मुखचतुष्टयेन ब्रह्मा मन्दं स्मयमानस्सन् "सौम्य! अथ त्वं उपनिषदं लिखितुं न शक्नोषि। अलं व्यर्थप्रयत्नेन। विरमास्मादारंभात"-इत्यवदत।

बालर्षेर्मनस्समाहितं नासीत्। तथापि धाता अन्तरधात।

  

कश्चिन्मृगयुरागत्य "आर्य! पिपासार्दितः श्रान्तो मार्गायासेन खिन्नश्चाहं। पातुं सदयं किंचिदिव पानीयं किमु प्रदीयेत?" इति ऋषिं पप्रच्छ।

बालर्षिः अन्तर्गत्वा निर्जलं निजकमण्डलुं दृष्ट्वा - "कञ्चित्कालमुपविश, अस्मिन्नेव क्षणे जलाशयात् जलमानयामि यावत्" इत्याह।

"जलाशयजलं न मे रोचते" इत्याह मृगयाजीवी। "तथा सति, क्षणं तिष्ठ, इतस्तावन्निकटे नदी काचित्प्रवहति। शीघ्रं गत्वा ततः प्रवहज्जलं आनेष्यामि"-इत्याह बालर्षिः।

"न शक्यं, प्रतीक्षमाणः अत्रोपवेष्टुं नाहं शक्नोमि। किञ्च, यदि भवान् नदीं गमिष्यति, न पुनः प्रतिनिर्वर्त्स्यते। तत्र हि व्याघ्रनकादयो हिंस्रा जन्तवः त्वां हन्तुं प्रतीक्षन्ते" - इत्याह मृगयुः। तस्याभिप्रायः दुर्बोध आसीदृषेः। सालोचनं स्थितस्यैव तस्य मृगयुस्तिरोहितः।

  

“हंहो ! नाऽयं मृगयुः, अपि तु चतुर्मुख एव चतुरं मृगयुर्भूत्वा मामुपदेष्टुं इह आयातः । यथा हि-मया उक्तं-प्राचीनोपनिषदां अध्ययनं न करिष्यामीति तथैवानेनाप्युक्तं जलाशयजलं न पास्यामि इति । अथ सांसारिकं जीवितमपि निराकृतं मया । तद्धि प्रवाहजलमिव अनुक्षणं नवं नवं सत् धिषणाया नवनवोन्मेषं जनयिष्यति । न जाने जीवितस्रवन्त्यां कति वा वस्तूनि प्लवमानानि दृग्गोचराणि पुनरदृश्यानि च भवन्ति । अस्मिन्नस्थिरे अस्थिराः पदार्थाः बहवो हि भूत्वा भूत्वा कालगर्भे विलीयन्ते । अतोऽत्रापि सांसारिके जीविते स्थितिं अनभिलषता मया अनुभवात्मकं ज्ञानं प्राप्तुमपि सम्मतिर्न दर्शिता । कमण्डलौ तु नोदकम् । उदकं चेदावश्यकं तर्हि जलाशयाद्वा नदीप्रवाहाद्वा तदानेतव्यम् । अन्यथा तत्कथं लभ्येत ? इदं वस्तुतत्त्वम् । “नष्टो मोहः स्मृतिर्लब्धा, त्वत्प्रसादाच्चतुर्मुख, स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव” ।

इति मनसि मनसाऽमन्यत बालर्षिः ।

“महान् सन्तोषः” - इति वदन् पुनस्साक्षात्कृत्य दर्शनेन तं बालर्षिं धन्यं व्यधात् विधाता ॥



# सहकारसंघाः

महता भाग्येन राजमानोपि जनः कतिपयासु वेलासु अन्यसाहाय्यं आकांक्षत्येव । धनहीनानां कृषिकाणां कार्मिकाणां च विषयः किमु वक्तव्यः ? ते प्रतिपदं अन्यसहकाराय प्रसृतिं प्रसारयन्त्येव । सहकारालाभे च विपद्यन्ते । सहकारलाभेपि तात्कालिककार्यसौकर्येपि अन्ते क्लिश्यन्त्येव । अधनिनः एते स्वसंकटनिराकरणाय धनवतः आश्रित्य तदादिष्टसमयेन महतीं वृद्धिं प्रतिश्रुत्य ऋणं स्वीकुर्वन्ति । कालवैपरीत्येन कष्टबाहुल्येन वा एते यदि धनं न प्रत्यर्पयन्ति तदा उत्तमर्णाः (धनदाः) एतेषां गृहक्षेत्रादिकं निरुद्ध्य अल्पमूल्येन विक्रीय च एतान् निराधारान् कुर्वन्ति । एतेन अधनाः पूर्वतोपि दुःखिताः भवन्ति ।

तदुद्धरणाय सर्वकारेण बहूनि शासनानि सृष्टानि । परन्तु तानि कार्यकारीणि न भवन्ति । वृद्ध्याजीवाः कुटिलबुद्ध्या तानि शासनानि निर्वीर्याणि कुर्वन्ति ।

प्रथमत एव गृहीतादधिकं ते लिखन्ति । प्रथममासीयां वृद्धिं स्थ यित्वा शिष्टमेव अधमर्णेभ्यः (ग्राहकेभ्यः) अर्पयन्ति । वस्तूनि आभरणानि च विना प्रमाणकं न्यासीकुर्वन्ति । एवंभूतेन अत्याचारेण दरिद्राः दरिद्रतमाः भूत्वा क्षीयन्ते ।

एतन्निरासाय सहकारसंघाः यदि सक्रियाः भवेयुः प्रभवन्ति । धनिनां अधनिनां वा अत्र सभ्यता भवति । तैः सञ्चितं धनं आलम्ब्य सर्वकारोपि प्रभूतं धनं उपहरति । तदुभयेन धनेन वस्तुजातं यथार्थमूल्येन क्रीयते सभ्येभ्यो विभज्यते च । अल्पवृद्ध्या ऋणं च दीयते । अल्पशः अनेकशश्च प्रत्यर्पितं धनं ऋणविमोचनाय आदीयते च । अत्र न दुराशायाः प्राबल्यमस्ति नापि च परहिंसापरायणता । सभ्यमध्यादेव गृहीतेभ्यः संघनिर्वाहकेभ्य दरिद्रः स्वकष्टादिकं निवेदयितुं ऋणं च ग्रहीतुं प्रत्यर्पणवेलां च विलम्बयितुं च शक्नोति । यदि संघस्य व्यापरे लाभः आपतेत् र्हि लाभेपि भागः सभ्यमनुप्राप्नोति । सर्वकारस्य दृष्टिविषयत्वादस्य संघस्य न कापि हानिः भवति ।

सहकाररीत्या कोशाः (Banks) अपणाः (Stores) गृहनिर्माणसंघाः (Bilding Socities) कर्मागाराः (works shops) भून्यासकोशाः (Land Martgage Banks) एवमादयः बहवः विद्यन्ते । एतैः प्रजानां महान् उपकारः भवति ।

अधुना एतैः अपकारोपि भवतीति अभ्यूह्यते । तथाहि-वणिजः कर्षकाश्च इदानीं स्वायत्तं धान्यं वस्तुजातं वा कोशेषु न्यासीकृत्य ऋणं संपाद्य तेन पुनः धान्यादिकं क्रीणन्ति, पुनः तदपि कोशेषु न्यस्यन्ति । एवं साधारणोपि महाजनः वस्तुजातं क्रीत्वा कोष्टेषु मुद्रयति । तेन आवश्यकं वस्तु विपणिं न आगच्छति आगतमपि बहुमूल्यं भवति । एवं प्रजानां नित्यावश्यकवस्तूनामपि मूल्यं कृत्रिमविधया महोन्नतस्थितिं नीतं खेदमेव जनयति । सर्वकारेण यद्यपि वेतनादि अभिवृद्धिः पदे पदे क्रियते तथापि प्रजाः दरिद्रा एव वर्तन्ते । सस्यसमृद्धा वस्तुसमृद्धावपि अयं क्षामः प्रजाः परिपीडयति । न जाने कदा वा सुखजीवनयोग्यः कालः पुनरागमिष्यति इति ।

अतः प्रजाः प्रार्थये सहकारसंघानां सद्विनियोगाय सकल संपादनाय च प्रयतितव्यमिति ॥



## Names of Subscribers for Gairvani.

| | | | |
|---|---|---|---|
| 108. | Headmaster, Middle School, Ramanayudupeta | 1 | 50 |
| 109. | Headmaster, Middle School, Jayarupeta, Masilipatam | 1 | 50 |
| 110. | Headmaster, Jai Hind Scy. School, Masulipatam. | 1 | 50 |
| 111. | Kovida Vidyalaya, Rajupeta, Masulipetam | 1 | 50 |
| 112. | P. T. B. Srinivasa Sastry, Guntur | 1 | 50 |
| 113. | M. Subramanya Sastry, Ponnuru. | 1 | 50 |
| 114. | G. V. Subbamma, Ponur | 1 | 50 |
| 115. | Vitalacharya, Anantapur. | 4 | 00 |
| 116. | P. Venkatachalam, Anantapur. | 4 | 00 |
| 117. | S. Anjeneyulu, Anantapur. | 4 | 00 |
| 118. | K. Chennarayudu, Anantapur. | 4 | 00 |
| 119. | Sambhu Dayalu Sastry, Harigram, U. P | 4 | 00 |
| 120. | S. Pradyumnacharya, Shahapur. | 4 | 00 |
| 121. | Karyadarsi, Vidyarthi Sangh, Ponur. | 4 | 00 |
| 122. | P. Vijayalakshmi, Ongole. | 4 | 00 |
| 123. | P. V. Narayana, Ongole. | 4 | 00 |
| 124. | B H. Chinchupunnaiah, Kandukur. | 4 | 00 |
| 125. | B Seetharama Rao, Kothapalli | 4 | 00 |
| 126. | B. Sreeramasastry, Gunturu. | 1 | 50 |
| 127. | R. N Sreeramulu Chetty, Kattukanur. | 4 | 00 |
| 128. | D. Sreenivasamurthy, Ongole. | 4 | 00 |
| 129. | E Muniratnamnaidu, Parameswaramangalam | 1 | 50 |
| 130 | Nayanabhiram Brahmachary, Guntur. | 4 | 00 |
| 131. | J. Muniratnam, Kaverirajapuram. | 4 | 00 |
| 132 | T. P. Ramanujaswamy, Ramatheertham | 4 | 00 |
| 133. | Headmaster, Vaduvuru High School. | 5 | 00 |
| 134. | C. V. Subbanna, Proddaturu | 10 | 00 |
| 135. | K. Munireddy, Chittoor | 5 | 00 |
| 136. | M. Rajasekhar, Anantapur. | 4 | 00 |

( सशेषम् )

Register No R. N. 8145/60.



एतत्सभायाः



श्री. ति. कं तिरुवेङ्कटाचार्यः

प्रधानमन्त्री



Published by Sri N Ramanatha Iyer, B.A., B, L., Advocate
& Secretary, S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri T. K. Thiruvengadacharya,
at Vijaya Press, Chittoor (A. P.) C. 1000.